॥ श्रीगायत्रीशापविमोचनम् अथवा गायत्रीशापोद्धारस्तोत्रम् ॥

शापमुक्ता हि गायत्री चतुर्वर्गफलप्रदा ।
अशापमुक्ता गायत्री चतुर्वर्गफलान्तका ॥

ॐ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता
प्रजापतिरृषिः अथवा ब्रह्मा ऋषिः । कामदुघा गायत्री छन्दः ।
भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता ।
ब्रह्मशापविमोचनार्थे जपे विनियोगः ॥

ॐ गायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः ।
तां पश्यन्ति धीराः सुमनसो वाचमग्रतः ।
ॐ वेदान्तनाथाय विद्महे हिरण्यगर्भाय धीमही तन्नो ब्रह्म प्रचोदयात् ।
ॐ देवि गायत्री त्वं ब्रह्म शापात् विमुक्ता भव ॥

ॐ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य
निग्रहानुग्रहकर्ता वसिष्ठऋषिः ।
विश्वोद्भवा गायत्री छन्दः ।
वसिष्ठानुग्रहिता गायत्रीशक्ति देवताः ।
वसिष्ठ शाप विमोचनार्थं जपे विनियोगः ॥

तत्त्वानि चाङ्गेष्वग्निचितो धियांसः ध्यायति विष्णोरायुधानि बिभ्रत् ।
जनानता सा परमा च शश्वत् । गायत्रीमासाच्छुरनुत्तम च धाम
ॐ गायत्रीवसिष्ठशापाद्विमुक्ता भव ।

ॐ सोऽहमर्कमयं ज्योतिरात्मज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसोऽस्म्यहं ॥
(इति युक्त्व योनि मुद्रां प्रदर्श्य गायत्री त्रयं पदित्व )
( योनि मुद्रा दिखाकर ३-तीन बार गायत्री मन्त्र का जाप करे ।)
ॐ देवी गायत्री त्वं वसिष्ठ शापात् विमुक्ता भव ॥

ॐ अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य
नूतनसृष्टिकर्ता विश्वामित्रऋषिः ।
वाग्दोहा गायत्री छन्दः ।
विश्वामित्रानुगृहिता गायत्री शक्तिः सविता देवता ।
विश्वामित्रशापविमोचनार्थे जपे विनियोगः ॥

तत्त्वानि चाङ्गेष्वग्निचितो धियांसस्त्रिगर्भां यदुद्भवां

देवाश्चोचिरे विश्वसृष्टिम् । तां कल्याणीमिष्टकरीं
प्रपद्ये यन्मुखान्निःसृतो वेदगर्भः ॥

ॐ गायत्रि त्वं विश्वामित्रशापाद्विमुक्ता भव ॥

ॐ गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवाः ।
देवाश्चक्रिरे विश्वसृष्टिं तां कल्याणीमिष्टकरीं प्रपद्ये ॥
ॐ देवी गायत्री त्वं विश्वामित्र शापात् विमुक्ता भव ॥

ॐ अस्य श्रीशुक्रशापविमोचनमन्त्रस्य श्रीशुक्र ऋषिः ।
अनुष्टुप्छन्दः । देवि गायत्री देवताः ।
शुक्र शाप विमोचनार्थं जपे विनियोगः ॥

सोऽहमर्कमयं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसोऽस्म्यहं ॥

ॐ देवी गायत्री त्वं शुक्र शापात् विमुक्ता भव ॥

प्रार्थना ।
ॐ अहो देवि महादेवि सन्ध्ये विद्ये सरस्वती ।
अजरे अमरे चैव ब्रह्मयोनिर्निमोऽस्तुते ॥

ॐ देवी गायत्री त्वं ब्रह्मशापात् विमुक्ता भव ।
वसिष्ठशापात् विमुक्ता भव ।
विश्वामित्रशापात् विमुक्ता भव ।
शुक्रशापात् विमुक्ता भव ॥